रविः ॥ बुधशुक्रयोःपूर्वंसाधितमस्ति ॥ यो मध्यमोरविःसएवबुधशुक्रौ ॥ ग्रहमध्येही नंशीघ्रोच्चंकार्यंशीघ्रकेंद्रंभवति ॥ षट्भाधि कंद्वादशराशिभ्यःशोध्यंषट्भान्यूनंयथास्थि तमेव ॥ तस्यांशाःकार्याःअंशप्रमितकोष्ठ कादधस्थशीघ्रफलंभागादंरस्थाप्यं ॥ अग्रिमां तरेणकलाद्यंगुण्यंषष्ठिभक्तंफलंकलाद्यंग्रा ह्यं ॥ तत्फलंपूर्वस्थापितफलमध्येरहितंस हितंकार्यं ॥ अग्रिमकोष्टवशात् ॥ तदंशाद्यं शीघ्रफलंभवति ॥ मेषादौऋणं ॥ तुलादौध नं ॥ अस्यार्धेनमध्यमःसंस्कृतःकार्यः ॥ शीघ्र फलार्द्धसंस्कृतोभवति॥ तदनन्तरमेतन्मध्ये म न्दोच्चंशोध्यंमंदकेंद्रंभवति॥ षड्भाधिकंद्वा दशराशिभ्यःशोध्यं तस्यांशाःकार्याःतत्प्रमि तकोष्टकादधस्थमंशाद्यंमंदफलंग्राह्यं ॥ अ ग्रिमांतरेणकलाद्यंगुण्यं ॥ षष्टिभक्तंकला द्यं ॥ तत्पूर्वस्थापितफलमध्येरहितसहितं

कार्यंमग्रिमकोष्टवशात् ॥ तन्मंदफलंभवति
इदंयथागतंधनर्णसंपूर्णमध्यग्रहेदेयंस्पष्टमंदः
स्पष्टोभवति ॥ इदंमंदफलंपूर्वंशीघ्रफलमध्ये
धनंचेत्धनं ॥ ऋणंचेदृणंदेयं ॥ द्वितीयशी
घ्रफलसाधनेशीघ्रकेंद्रंभवति ॥ अथवाशी
घ्रोच्चंमंदस्पष्टमध्येशोध्यंशीघ्रकेंद्रंभवति ॥
अस्मात्पूर्ववत्शीघ्रफलंकार्यं ॥ तन्मन्दस्पष्ट
ग्रहेदेयंस्पष्टग्रहोभवति ॥ अथगतिसाधनं ॥
मंदफलसाधनेयन्मंदांकांतरंतेनस्वीयागति
र्गुणयेत् ॥ फलंकलाद्यंतत्स्वगतौमक
रादिमंदकेंद्रेऋणंकर्कादौधनंकार्यं ॥ साम
न्दस्पष्टागतिर्भवेत् ॥ अनेनोनाशीघ्रोच्चगतिः
शीघ्रगतिर्भवति अंतिमशीघ्रफलसाधनाच्छी
घ्रांकांतरंतेनांतरेणशीघ्रगतिगुणयाषष्ट्याभा
ज्याफलंअग्रिमकोष्टकवशान्मंदस्पष्टगतौध
नर्णंकार्यंसास्पष्टागतिर्भवेत् ॥ विपरीतशो
धनेनवक्रागतिः ॥ ॥ उदाहरणं ॥ भौमस

ध्यै ९ । २८ । २१ । १३ एतस्यशीघोच्चं ८
वि: १ । ४ । ५७ । २४ शोधित:जातंशीघ्
केंद्रं ॥ ८ । २४ ।२३ ।४८ षड्भाधिकंअतश्च
क्रात्शोधितं ३ । ५ । ३६ । ११ । अस्यांशा:
८५ । ३६ । ११ शीघ्फलंधनं ३४ । २२ ।
३८ । अस्यार्धेन १७ । ११ १८ । संस्कृतोभौ
म: ॥ १० । १६ । ३२ । ३२ एतन्मध्येमंदो
च्चं ४ । १० शोधितंजातंमंदकेंद्रं ६ । ६ ।
३२ । २३ मंदफलंधनं १ । २८ । ३६ मध्य
मभौमेदत्तंजातोमंदस्पष्टोभौम: ॥ १० । ० ।
५० । ४८ । तन्मन्दफलंप्रथमंशीघ्केंद्रस्य ध
नंदत्तंजातंद्वितीयशीघ्केंद्रं ८ । २५ । ५ ।
२५ । अस्मात्प्राग्वत्शीघ्फलंधनं ३२ ।
५८ । ४६ शीघ्फलसंस्कृतोमंदफलस्पष्टोना
त:स्पष्टोभौम: ॥ ११ । ४ । ४८ । ३४मंदांका
तरेण १४ । गतिर्गुणिता। ४४० । ४ षष्टिभ
क्ताफलंकर्कादिकेंद्रत्वात्धनं ॥ ७ । २० ऋ

नेनसंस्कृतामध्यागतिः ॥ ३१ । २६ । जाता
मंदस्पष्टागतिः ३८ । ४६ अनेनोनाशीघ्रोच्च
गतिः ५९।८ जाताशीघ्रकेंद्रगतिः २० ।२२
इयंशीघ्रांकांतरेण १६ । गुणिता ३२५।५२
षष्टिभक्ताफलं ५ । २५ अनेनसंस्कृतामंदस्प
ष्टागतिर्जातास्पष्टागतिः ॥ ४४ । ११ इति
भौमस्पष्टीकरणं ॥ अथबुधस्पष्टीकरणं ॥
॥ शीघ्रकेंद्रे १० । ३ । १२ । ५२ शीघ्रफलार्धं
७ । १० । ६ संस्कृतोबुधः १ । १२ । ७ । ३०
मंदोच्चं ७।० । रहितंमंदकेंद्रं ६ । २ । ७
। ३ मंदफलंधनं ० । १० । ३६ मध्यग्रहेद
त्तंमंदस्पष्टं ॥ १ । ५ । ८ । ० । तन्मन्दफलं
प्रथमशीघ्रकेंद्रे दत्तंजातंद्वितीयशीघ्रकेंद्रं ॥
१० । ३ । २३ । ८ । अस्मात्पुनःशीघ्रफलंधनं
१४ । १७ । ५५ मंदस्पष्टे दत्तं जातस्पष्टोबुधः
१९ । १९ । २५ । ५५ मंदांकांतरेणगतिगु
णितः २९ । ५ । ४० षष्टिभक्ताफलं ४ । ५५

मकरादिकेंद्रत्वात्तृणं मंदस्पष्टागतिः ५४।१३
अनेनोनाशीघ्रोच्चगतिर्जीताशीघ्रकेंद्रगतिः
१६१।१६ इयंशीघ्रांकांतरेण १३ गुणिता
१७।१८।२३ षष्टिभक्ताफलं २८ ।५८
अनेनसंस्कृताजातास्पष्टागतिः॥ १०३। १३
इतिबुधस्पष्टीकरणं॥ अथगुरुस्पष्टीकरणं॥
गुरुमध्ये ४।७।१२।३७। सूर्यः १।४
।५७। २४।शोधितःशीघ्रकेंद्रं ३।२।
१५।१३ फलार्धं ऋणं ५।४१। २२ संस्कृ
तोगुरुः ४।१।१३। १५ मंदोच्चेन ५।२०
हीनंमंदकेंद्रं १०।११३१। १५ मंदफलार्ध
नं ३।४३।३६ मंदस्पष्टोगुरुः ४।१०।५६
। ३ मंदफलंप्रथमशीघ्रकेंद्रे दत्तंजातं द्विती
यं शीघ्रकेंद्रं ३।५।५८।३६ तत शीघ्रफलं
ऋणं ११।२८ ।२८ स्पष्टोगुरुःमंदांकांत
रे ३ गतिः ५ । निघ्नी १५ षष्टिभक्ताफलं
०।१५। फलंमकरादित्वात्तृणं ४ । ४५

जातामंदस्पष्टागतिः । अनयोनाशीघ्रोच्चग
तिः ५८ जाताशीघ्रकेंद्रगतिः ५४ । २३ । इ
यंशीघ्रांकांतरेणगुणिता ५४ । २३ षष्टिभक्ता
फलंमंदस्पष्टगतौधनं जातास्पष्टागतिः ५ ।
३९ इतिगुरुस्पष्टीकरणं ॥ ॥ अथशुक्रस्पष्टी
करणं ॥ शुक्रशीघ्रकेंद्रं ८ । २४ । ४० । १७
फलार्धंकरणं १८ । ५० । ७ संस्कृतः शुक्रः १
। २३ । ४७ । ३१ । मंदोच्चं २ । २० । मंदकें
द्रं ११ । ३ । ४७ । ३१ मंदफलंधनं ० । ४९
। २५ मंदस्पष्टःशुक्रः १ । ५ । ४६ । ४९ शीघ्र
केंद्रं ८ । २५ । २९ । ४३ । शीघ्रफलंधनं
३७ । २४ । ६ । स्पष्टः शुक्रः २ । १३ । १० ।
५५ मंदांकांतरं २ मंदस्पष्टागतिः ॥ शीघ्र
केंद्रगतिः ३८ । २८ शीघ्रांकांतरं २० शी
घ्रगतिफलंधनं १२ । ५९ । स्पष्टागतिः ७०
। ९ इतिशुक्रः ॥ अथशनिस्पष्टीकरणं ॥
शीघ्रकेंद्रं ९ । २५ । ३१ । २७ शीघ्रफलार्द्धं

धनं २।४२।२७ संस्कृतः शनिः ११।३।
१२।१८। मंदोच्चं ७।२६। मंदकेंद्रं ३७
।१२।१८ मंदफलंऋणं ७।३८।४६ मंदः
स्पष्टः १०।२२।५०। शीघ्रकेंद्रं ९। १७
।५२।३९ शीघ्रफलंधनं ५।४८।२२। स्पष्टः
शनिः १०।२८। ३८। ३५ मंदांक्रांतरं १
मंदस्पष्टागतिः २।२ शीघ्रकेंद्रं गतिः ५७
।६। शीघ्रांक्रान्तरंधनं २।५१ स्पष्टाग
तिः।४।५३। अथसौरभोपरिकिंचित्स्थूलं
रव्यादिग्रहाणांस्पष्टीकरणं तत्रादौअभी
ष्टदिवसेउक्तवत् ग्रहचक्रीसाधयातदुपरिस्व
स्ववाटिकायांघटिकादिग्रहःकार्यः ॥ तस्य
कांदइतिसंज्ञाकार्या ॥ तदनंतरंदेशांतरसं
स्कारःकार्यः ॥ सयथा। यस्यग्रहस्यकलात्म
कंदेशांतरंतत्तद्ग्रहं फलात्मकेनपलेनघटिका
दिग्रहस्यपलस्थानेधनं चेत्सहितं ऋणंचेत्त
दारहितंकार्यं ॥ यस्यविक लात्मकंदेशां

तदंतरंषड्भक्तं विपलात्मकेनविपलसंस्कारेणस
हितरहितंकार्यं ॥ तदनंतरमब्दबीजसंस्का
रःकार्यः ॥ तद्यथा ॥ अंशादिबीजंषड्भि
र्भाज्यं ॥ तेनघटिकादिग्रहःसंस्कार्यः ॥ इति
आदौज्ञात्वाततस्स्फुटीकरणं ॥ तत्रादौस्पष्टस्य
सूर्यकंदस्यघटितुल्यं रविसौरभस्कंकोष्टकाद्
धस्कंघटिकादिफलंग्राह्यं ॥ अग्रिमांतरेण
शेषंगुणनीयं ॥ षष्टिभाज्यं ॥ पलात्मकेन
पूर्वसंस्थापितघटिकादिफलस्थानेयुतंकार्यं ॥
अग्रिमस्याधिकत्वात् ॥ एवंकृतेघट्यादिस्प
ष्टोरविर्भवति ॥ तदनंतरंषड्गुणः कार्यः ॥
अंशादिर्भवति ॥ अंशास्त्रिंशद्भक्ताराशयो
भवंति ॥ उदाहरणं ॥ पूर्वानीतरविकंदः ॥
५।४९। ४१ ।५४ देशांतरंऋणं ७।
५०संस्कृतः५।४९।३४।४पंचकोष्टकाद्घ
स्यं घटिकादिफलं५।१६।१२ अग्रिमांतरे
ण ५८।१७। शेषं ४९।३४।४ गुणितं

२८८८ षष्टिभक्तं फलं ४८।८ अनेनषटि
कादंग ६।४।२०। युतंषड्गुणितंजातोरा
श्यादिस्पष्टोर्कः॥१।६।२६।२० अथगतिसाध
नं॥ गतगम्यकोष्टांतरंएकेनांतरितंकार्यं॥ त
स्यकलाःकार्याःगतगम्यांतरापेक्षयाऽल्पाधि
कत्वेमध्यगतौरक्षिता॥ न्यूनेयुताःकार्यारवेः
स्पष्टागतिर्भवति ॥ उदाहरणं ॥ गतग
म्यांतरं ॥ ०।५८।१७ एकेनांतरितं
०।१।४३। कला ४ ह्रतंगतगम्यांतरापेक्ष
याऽल्पाधिकत्वात् ॥ अनेनहीनारविमध्य
गतिः ५७।२५ अथचंद्रस्पष्टीकरणं ॥ ऊ
र्ध्वा केपंचचत्वारिंशद्युताजाताचंद्रोऽवक्री
तस्यलताइतिसंज्ञाकार्यातल्लतोपरिचंद्रसौ
रभोपरि चंद्रसौरभस्य सानुपातषटिकादि
फलंग्राह्यं ॥ तच्चंद्रकांदेषुयोज्यं ॥ तदनं
तरंषड्गुणितंकार्यं ॥ स्पष्टचंद्रोभवति ॥
सर्वत्रानुपातेषष्टिर्भाजकः ॥ उदाहरणं ॥

लता ४२ । ४१ । ६ । ३७ देशांतरं ० । ५० संस्कृतालता ४२ । ४१ । ५ । ४७ । चंद्रसौरभस्थं द्विचत्वारिंशत्कोष्टकादधस्थं सानुपातं घटिकादिफलं ० । ४८ । ५६ । २८ चंद्रकंद: ३५ । २ । १२ । ७ देशांतरं १ । ४१ । २० संस्कृतं ३१ । १० । २६ । ४७ फलेन युक्त: ३५ । २३ । १५ षडगुणित: स्पष्टश्चंद्र: ७ । ४ । ५६ । १८ अथगति: ॥ द्विचत्वारिंशत्कोष्टकादधस्थं सानुपातघटिकादिचन्द्रगति:फलं ॥ २ । १४ । ३५ षड्गुणंजाताअंशा: १३ । २७ । ३० षट्रागुणितास्पष्टोचन्द्रगति:कलाद्या ८०७३० ॥ ॥अथभौमस्पष्टीकरणं ॥ भौमकंदमध्येरविकंद:शोध्य: ॥ यच्छेषंतस्यलतासंज्ञाकार्या ॥ लतायाघटीप्रमितकोष्टकादधस्थंभौमसौरभस्थंसानुपातंघटिकाफलंग्राह्यं ॥ तत्फलंभौमकंदेयुयोज्यं ॥ तदुपकन्दसंज्ञकंभवति ॥ उप

कन्दोपरि उपकन्दस्य सानुपातं घटिकादि-फलं ग्राह्यं ॥ तत्फलं भौमकन्दमध्ये योज्यं सुकन्दो भवति ॥ लतामध्ये योज्यं सुलता भवति ॥ सुलतोपरि सुलताफलं सानुपातं घट्यादिफलं ग्राह्यं ॥ तत्फलं सुकंदेषु योज्यं तदनन्तरं घटीस्थाने दशभिर्हितं कार्यं ॥ तन्मकरंदसंज्ञकं भवति ॥ तदनन्तरं षड्गुणितं भवति भौमस्पष्टो भवति ॥ अनया रीत्या गुरुशन्योः स्पष्टीकरणं ॥ बुधशुक्रयोः साधितांकचतुष्टययोगे घटिकादिकेंद्रवल्ली सैवलता ज्ञेया ॥ रविकन्द एव बुधशुक्रयोः कन्दौ ॥ अनयोः स्पष्टीकरणं भौमवत्कार्यं ॥ ॥ उदाहरणं ॥ रविकन्दः ५ । ४८ । ३४ । ४ । भौमकन्दः ४८ । ५३ । ३६ । १८ । दीर्घान्तरं ४ । १० संस्कृतः ४८ । ५३ । ३२ । ८ एतन्मध्ये रविकन्दः शोधितः जाता लता ॥ ४४ । ३ । ५८ । ४ लतोपरि प्राप्तं सौरभस्थं घटिकादि

फलं ॥ ४१ । १२ । ७ अग्निमांतरे ८ ।
२८ । अनुपातफलं ० । ३३ । ३५ अनेन
पूर्वफलं संस्कृतं ॥ ४१ । ११ । ३३ । २५ इदं
भौमकन्दमध्ये युतं जातोपकन्दः ३१ । ५ ।
५ । २३ एतदुपरिप्राप्तं उपकंदफलं सानुपा
तं ॥ २ । १४ । ५० । ८ अनेन युक्तो भौमकंदः
जातः सुकंदः ५२ । ८ । २२ । १७ पुनः फलेन
युता जाता सुलता ॥ ४६ । १८ । ४८ । ३३
सुलतोपरिप्राप्तं सुवल्लीफलं १३ । ३८ । ४१
। ५५ अनेन सुकन्दो युक्तः ६५ । ४८ । ४ ।
१२ दशभिर्हीनो जातो मकरंदः ५५ । ४८ ।
४ । १२ षड्गुणितः जातो राश्यादिः स्पष्टो भौ
मः ११ । ४ । ४८ । २५ अथ गतिसाधनं ॥
भौमस्योपकन्द फलयोर्गतगम्ययोरंतरेण ग
तिर्गुणनीया ॥ तन्मन्दफलं भवति ॥ इदं म
ध्यगतौ गम्यस्याधिकत्वे युतं न्यूनत्वे ऋणं ॥
सा मन्दस्पष्टा गतिर्भवति ॥ अनयोनामीषं

केंद्रगतिशीघ्रोच्चगतिर्भवति ॥ इयंसुवल्लीफ
लांतरेणगुण्यागतेःशीघ्रफलंभवति ॥ तेनफ
लेनगतिरेष्यांकस्याधिकत्वेमन्दस्पष्टागतीर
हिता ॥ न्यूनत्वेसहितासास्पष्टागतिर्भव
ति ॥ अनयारीत्याबुधशुक्रयनीनांगतिसा
धनङ्कार्यं ॥ उदाहरणं ॥ उपकांदफल
योरंतरं ० । १३ । २३ । गतिः ३१ । २५ ।
गुणिताजातंमंदफलंएष्यांकस्याधिकत्वादू-
नं ७ । ० । ४१ । अनेनयुतामध्यगतिः
जातामंदस्पष्टा ॥ ३८ । २७ अनेनरहि
ताशीघ्रोच्चगतिः ५९ । ८ जाताशीघ्रकेंद्रग
तिः २० । ४१ इयंसुवल्लीफलांतरेण ० । १६
। ५५ गुणिताजातंशीघ्रगतेः फलंएष्यांक
स्याहीनत्वात्धनं ५ । ४९ । ५३ अनेनयुता
मंदस्पष्टागतिः जातास्पष्टा ४४ । १७ अथ
बुधस्पष्टीकरणं॥ लता ५१ । ३४ । ३३ । ५४
घ्रयीकेंद्रगतिप्रमाणेनदेयांतर २४ । ५० ।

संक्रांता ५।१ । ३१ ।८। ३० । अनेनबुधकंदः ५ । ४८ । ३४ । युतोजातः उपकंदः ३० । २० ॥ ४२ । ३४ अस्मादुपकंदफलं २११ । ४६ । ३८ अनेनसुकंदोयुक्तः जातःसुकंदः ७ । ५१ । २० । ४३ सुखतायुताजातासुख ता ५२ । ३३ । ५ । ३३ सुवल्लीफलं१०।२३ ।६ । २८ अनेनसुकंदोयुक्तः १८ ।१४ । २७ । ११ दशभिर्हीनोजातोमकरंदः ८ । ४४ । २७ । ११ षड्गुणितोजातोराश्यादिःस्प ष्टोबुधः १ । १८ । २६ । ४३ । उपकंदफल योरंतरं ० । ५ । ८ धनंमंदस्पष्टागतिः ६४ । १२ शीघ्रकेंद्रगतिः । १८ । १ । २१ सुवल्ली फलयोरंतरंऋणं ० । १२ । ४७ स्पष्टाग तिः १०२ । ५० ॥ ॥ अथगुरु स्पष्टीकर णं ॥ रविकंदः ५ । ४८ । ३४ । ४ गुरुकंदः २१ । ४३ । ३१ । ५८ देशांतरं ० । ४० संक्रा तः २ । ४३ । ३१ । १८ बीजंऋणं ० । ३१ ।

२५ । १० संस्कृत: २१ । १२ । ६ । ८ एतन्म ध्ये रविकंद: शोधित: जातालता १५ । २२ । ३२ । ४ सौरभोपरिफलं ३० १९ । ४४ । । ५१ अनेनगुरुकंदोयुक्त: जातउपकंद: ५१ । ४१ । ५० । ५८ उपकंदफलं २ । ३८ । १।४८ । अनेनकंदोयुक्तोजात:सुकंद: २३ । ५० । ७ । २७ सुलता १८ । ० । ३३ । ५३ सुवल्लीफलं ६ । ५ । १६। ४४ । अनेनसुकंदो युक्त: २९ । ५५ । २४ दशहीनोजातोमकरं द: १९ । ५५ । २४ । ४१ षड्गुणितोराश्या दिस्पष्टोगुरु: । ३ । २९ । ३२ । २८ उपकं दफलयोरंतरंस्फटं ० । ३ । २२ । मंदस्पष्टा गति: ४ । ४४ । शीघ्रकेंद्रगति: । ५४ । २४ सुवल्लीफलयोरंतरंस्फटं ० । २० । २९ । स्पष्टागति: ५ । १० ॥ ॥ अथभृगुस्पष्टीकरणं शुक्रलता ४३ । १९ । ३०।१९ देशांतरं ४ । ५० संस्कृता ४३ । १९ । २५ । १९ बीजंधनं

०।४७।७।४० संस्कृतालता ४४।६।
४३।६ सौभस्यंफलं ४६।३६।३३।८
। अनेनयुक्तकंदोभवति ५।४६। ३४।४
यक्तोजातउपकंदः ५५।२६।७।१२ उ
पकंदफलं २।८।१४।२७ सुकंदः ७।
५७।४८।२१ सुलगा ४६।१४।४७।
३६ सुवल्लीफलं १४।१३।२७।५१ अनेन
सुकंदोयुक्तः ६४।४६।२८।० मकरन्दः ५४।
४६।२८।० षड्गुणः स्पष्टः शनिः १०।२८
३८।४८। उपकन्दफलयोरन्तरंधनं ०।
०। ४४ । मन्दस्पष्टागतिः ५७।७। सुव
ल्लीफलयोरन्तरंऋणं॥०।०।२० स्पष्टाग
तिः ४। १४॥ ॥ अथायनांशसाधनं॥ ॥ इ
ष्टशकः कुयमाब्धिहीनः कार्यः तदनन्तरस्व द
शमांशेनहीनः कार्यः ॥ षष्ट्याभाज्यः अयनां
शाभवन्ति॥ उदाहरणं॥ इष्टशकः १५।३४
अनेन४२१ हीनः ११।३ अयंद्विष्ठः अस्यदश

सांशेन १।१।१८ रहितः १००।१।४२ ष
ष्टिभक्ता जाताश्चयनांशाः॥ १६।४१।४२
अथदिनमानसाधनं॥॥ स्पष्टःसूर्यःअयनां
शयुक्तःकार्यःतस्यांशाषड्भिर्भाज्याःषष्टिकोष्ट
कात्दयस्थंघटयाफलंस्यात्यं॥ तद्दिनमानरू
पं॥ अग्रिमकोष्टकान्तरेणशेषंगुणयं॥ ष
ड्भक्तानिलब्धानिपलानि॥ एतानिपूर्वस्था
पितदिनमानफलस्थानेअग्रिमकोष्टकवशा
त्सहितानिरहितानिवाकार्याणि॥ तद्दि
नमानंभवेत्॥ उदाहरणं॥ सूर्यः १।६
।२३।० अयनांशैर्युक्तः १।२३।७।४२
अंशाः ५३।७।४२। षष्टिभक्ताफलं ८ ए
तत्तुल्यकोष्टकस्थंदिनमानं ३२।४४ अग्रि
मान्तरेण १८ शेषं ५।७।४२ गुणितं
८२।१८।३६। षड्भिर्भक्तंलब्धपलानि १५
एतानिअग्रिमस्याधिकत्वात्पूर्वस्थापितदि
नमानंपलमध्येयुतोनितंजातंदिनमानं ३३।

८ ॥ अथप्रकारांतरेणरवेः प्रतिराशिप्रति राशिप्रत्यंशोपरिदिनमानसाधनं ॥ स्पष्टोर्कः साध्यः ॥ अत्रायनांशसंस्कारोनास्ति ॥ रवे र्यावंतोराशयस्तदधोयावंतोभागाः संतित त्तुल्यराश्यंशस्सूर्यादधस्थंदिमानं ग्राह्यं ॥ अ ग्रिमांतरेणकलाद्यं गुणंत्रषष्ट्याभाज्यं पला त्मकंलब्धंपलस्थानेअग्रिमकोष्ठकवशात्रहि तसहितंकार्यंतद्दिनमानंस्यात् ॥ उदाहर णं ॥ सूर्यः १ । ६ । २६ । ० एतत्तुल्यसू र्यादधस्थंदिनमानं ॥ ३३ । ५ अग्रिमांत रेण३ शेषं २६।० गुणितं ७८ षष्ट्याभक्तंफलं १ अनेनसंस्कृतंजातंस्पष्टंदिनमानं ३३ । ६ अथचंद्रदर्शनं ॥ यस्मिन्मासिशुक्लप्रतिपदि चंद्रदर्शनमवलोकयतेतस्मिन् मासितद्दिनेसू र्योयद्राशावस्तितद्राशिस्थःसूर्यस्थिरंकपंक्तौ यस्मिन्कोष्ठकेभवतिसकोष्टकोग्राह्यः॥तदनं तरंयस्मिन्राशौराहुरस्तितद्राशिस्थोराहुः

ऊर्ध्वं पंक्तौयस्मिन्कोष्टकेभवतितत्कोष्टकाद
धस्तात्सूर्यकोष्टकाभिमुखीघटिग्राह्या ॥ त
दनंतरं अमावास्यायाःविद्यमानघटिकास्ताः
षष्टिकामध्ये शोध्याः तदनंतरं यच्छेषंभव
तितद्दिनजं दिनमानंतन्मध्ये योज्यं ॥ एवंकृते
याघटिकाभवंतिताःपूर्वरक्षापितघटिभ्यश्चेद
धिकास्तदाप्रतिपदिचंद्रोदयःन्यूनेचदृश्यः॥
किंतुद्वितीयायांदृश्यःउदाहरणं॥ सूर्यः४।२०
राहुः १०।२ अत्ररविः सिंहेकुंभेराहुः ॥
अनयोःप्राप्तघटी८१अमावास्यायाः घटिकाः
१।४० षष्टिमध्येशोधिताः ५८।५० शेषं
दिनमानेनयुक्तं ॥ ३१।२४ जाताः ८९।
४३ एताभ्यः ८ अधिकाअतोत्रप्रतिपद्ये
वचंद्रदर्शनं ॥ ॥ अथभौमादीनांवक्रमार्गो
दयास्तसाधनं ॥ अंतिमशीघ्रफलसाधनेयच्छी
घ्रकेंद्रंतस्यचक्रशुद्धस्यांकाःकार्याःप्रोक्तांशा
नांदृष्टांशानां चसाम्येतस्मिन्नेवदिनेवक्रादि

कंसयात् ॥ न्यूनाधिकेयद्दिवसानयनंप्रोक्तो
ष्टांशानामंतरकलाः कार्याः शीघ्रकेंद्रगत्या
भाज्याः ॥ लब्धंदिनघटीपलाद्यंग्राह्या
प्रोक्तांशेभ्यइष्टकेंद्रांशाअधिकास्तदालब्धेनअ
वधिरूक्षवारादिकंरहितंकार्यं ॥ न्यूनेस
हितंकार्यं ॥ तद्वारघटीपलेषुवक्राद्यंस्यात्।
अस्तोदयावितिदिवाकरपद्यं ॥ अथभौमा
दीनांचरणगतिसाधनं॥भपादेतिदिवाकरप
द्यं ॥ वैशाखशुक्ल ५ शनाववधिरूक्षोभौमः
॥ ३ । २६ । ११ ३९ आश्लेषाचतुर्थचरणेभौ
मः ३ । २६ । ४० अनयोरंतरंकलाः ३८ ।
११ अवधिरूक्षभौमगत्या १९ । २३ भक्ताः फ
लंदिनादिकं १ । ५७ । ४१ इदमवधिरूक्षवा
रादौ ० । ४६ । ३४ युतं २ । ४३ । ४५ भपादज्ञं
भौमात् अवधिरूक्षस्यन्यूनत्वात् ॥ एवंवैशा
खशुक्लसप्तम्यांसोमेसूर्योदयाद्गतघटीषु १३
पलेषु ४५ तदाश्लेषाचतुर्थपादेभौमः ॥ ॥ अ

थचंद्रग्रहणं ॥ पौर्णिमांतेयद्दिनमानंच
चंतस्यगतैष्यघटिकायोगःकार्यः ॥ तत्तुल्यघ
टिकाधस्ताच्चंद्रबिंबपातबिंबनामभूभबिंबं —
ग्राह्यं ॥ अग्रिमांतरेणक्षेपपलानिगुण्यानि ॥
षष्ट्याभक्तेनलब्धांगुलैरग्रिमकोष्टकवशात् स
हितरहितानिकार्याणि ॥ अंगुलात्मकंचंद्र
बिंबं ॥ भूभाबिंबंचभवति ॥ अथभूभायाःसं
स्कारः ॥ पौर्णमास्यांयद्राशौसूर्यसंक्रांति
रस्तितद्राश्यधस्तादंगुलादिकंपातफलंस्था
प्यं ॥ अग्रिमांतरेणसूर्यस्यभागाद्यंगुण्यं ॥
त्रिंशताभाज्यंव्यंगुलात्मकैफलेनअग्रिमको
ष्टकवशाद्धीनान्वितंकार्यं ॥ अनेनभूभायुता
कार्या ॥ सास्पष्टाभवतिपातफलंसदाधनंतद
नंतरंरविचंद्रयोर्बिंबयोर्योगार्धंकार्यं ॥ तन्मा
नैकखंडंभवति ॥ तत्शरोनंकार्यंग्रासोभ
वति ॥ उदाहरणं ॥ शकः १५२४वैशाखशु
क्ल १५सोमेघटि ५४।४० अनुराधानक्षत्रघ

गतैष्ययोगः ५८ । ३६ । सूर्यः ९ । ६ । ३० ॥
३७ । चंद्रः ७।६।३४।३५ राहुः ९।१४।१८।
११ अष्टपंचाशत्घटिकावस्थंचंद्रबिंबं ११ ।
१० अग्रिमांतरेण ११ शेषंगुणितं ३९ । ६
षष्ट्याभक्तंफलेनसंस्कृतंजातंचंद्रबिंबं ११ । ४
भूभाबिंबं २६ । १९ अनुपातफलेन २२ संस्कृ
तः २७ । ५४ इष्टसंक्रांत्यवस्थंफलं० ॥ ३
अग्रिमांतरेण ॥ ६ । शेषंगुणितं ३४ । ३७
जातं ३९ त्रिंशद्भक्तंफलेन १ संस्कृतं ० । ३२ अने
नभूभायुताजातास्पष्टाभूभा २८ । ३६ अन
योर्योगार्धंजातंमानैक्यखंडं ॥ १९ । ४५ अथग्रा
ससाधनं ॥ पर्वांतकालीनःसपातात्चंद्रःका
र्यः ॥ अथवाविराहुश्चन्द्रःकार्यः ॥ षडधिक
श्चेद्भगणाद्विशोध्यः ॥ न्यूनोयथास्थितएव ॥
तस्यांशाःकार्याःषड्भिर्भक्ताःकार्याःलब्धप्रमि
तकोष्टकस्थःअंगुलाद्यःशरोग्राह्यः ॥ अग्रि
मांतरेणशेषंगुणयं षट्भक्तंलब्धांगुलैःसंस्का

यः अंगुलात्मकः ग्रासोभवति ॥ उदाहरणं ॥
विराङ्कस्य च्छ्रः तस्यांशाः १७ । २ । १६ । १४
षड्गुणाः फलं २८ । १८ । ४६ । ग्रासः अनुपा
तफलेन ६ । २७ संस्कृताजाताः ग्रासोंगुला
दिः १२ । ६ । अनेनरहितं मानैक्यखंडं जा
तोग्रासः ७ । ३९ । अथस्थित्यानयनं ॥ ग्रास
स्यांगुलप्रमितकोष्टकादधस्था स्थितिः स्था-
प्या अग्रिमांतरेण व्यं गुलानि गुण्यानि षष्टि
भक्ताः लब्धफलैः सहिताः कार्याः । घटिकादि
स्थितिः स्यात् ॥ उदाहरणं ॥ ग्रासः ७ ।
३९ स्थितिः ३ । ३५ अनुपातफलेन ७ सहि
ताजाताघटिकादिस्थितिः ॥ ३ । ४२ अन्य
दवशिष्टकरणोक्तरीत्यासाध्यं ॥ ॥ इतिचं
द्रग्रहणं ॥ अथसूर्यग्रहणं ॥ शकः १५ ।
३२ मार्ग शीर्षकृष्ण ३० बुधेघटि ११ । ५८
सूर्यः ८ । ५ । २६ । २८ लग्नं १ । २ । ५ । ३४
त्रिभोनं अमावास्यायत्संक्रांतीभवतितत्सं -

क्रांतिराश्यधररुक्तंसूर्यबिंबंस्थाप्यं ॥ अग्रि मांतरेणसूर्य सभागाद्यंगुणयं त्रिंशद्भक्तं अंगुलात्मकंफलं अग्रिनकोटकवशाद्धीनान्वितं कार्यं ॥ अंगुलाद्यं सूर्यबिंबंभवति ॥ उदाहरणं ॥ धनुराशौसूर्यबिंबं ११ । ४४ आयातव्यंगुलैःसंस्कृतञ्जातंरविबिंबं ११२४ अथलंबनं ॥ त्रिभोनलग्नार्कांतरांशाः ॥ तेयथाराशित्रयाल्पाभवन्तितथाकार्याः ॥ तदनन्तरंषड्भिर्भाज्याःलब्धप्रमितपञ्चदशाधस्यघटिकादिलंबनंग्राह्य ॥ अग्रिमान्तरेणशेषंगुण्यंषड्भिर्भाज्यंलब्धैःफलैःसहितंघटिकादिलंबनंस्यात् ॥ सूर्यात्त्रिभोनलग्ने धिकेसतिधनं ॥ न्यूनेऋणंज्ञेयं ॥ उदाहरणं ॥ त्रिभोनलग्नार्कांतरांशाः ॥ ३ । २० । ४६ । षड्भिर्लब्धंशून्यं ॥ शून्यादधस्थंघटिकादिलंबनं ० । ० । ० । अग्रिमांतरेण २३ । २५ । शेषं ३ । २० । ४६ । गुणितं

८१ । ४२ । ३ षष्टिभर्भक्तं लब्धपलादिकैः १३ । ५८ सहितञ्जातङ्घटिकादिलंबनं ० । १४ अन्यदवशिष्टं पूर्ववत् ॥ ॥ एतत्पंचद शकोटकस्यलंबनस्यांकोपरिगृहणंस्थूलं ॥ क्रान्तिसाधनमाह ॥ सायनगृहस्यभुजां शाःकार्याः ॥ षष्टिभर्भाज्याःलब्धप्रमित कोष्टकस्थाघटिकाद्याक्रान्तिस्थाप्या ॥ लब्ध नत्रदनुपातःकार्यः ॥ तदनन्तरंषड्गुणि ताःकार्याःभागादिक्रान्तिस्यात् ॥ उदाहर णं ॥ सूर्यः ८ । ५ । २६ । २० अयनां शः १६ । ३८ । ५४ सायनःसूर्यः ८ । २२ । ६ । १४ अस्यभुजांशाः ८२ । ६ । १४ षड भक्ताःलब्धं ३३ घटिकादिक्रान्तिः ३ । ५४ । २६ पलात्मकेनानुपातेन २ । ४४ सहिता ३ । ५७ । ३० षड्गुणिताजाताभागाद्याक्रा न्तिः २३ । ४४ गृन्थकर्त्राएतेपञ्चदशकोष्टक स्यालंबनस्यांकाःअन्येपञ्चदशकोष्टेषुविप-

रीतास्थापिता: ॥ एवंचिंह्नितकोष्टेषुक्रान्त्यं
काजाता: ॥ अस्योपरिक्रान्तिसाधनं ॥ साय
नग्रहःषड्भाधिकश्चेच्चक्राद्विशोध्यःतस्यां -
शाःकार्याःषड्भिर्भाज्याःलब्धकोष्टकस्याध -
टिकादिक्रांति: ॥ पूर्ववत्सानुपातात्ग्रा
ह्याःअत्रानुपातफलंअग्रिमकोष्ठवशात्ना -
न्वितङ्कार्यं ॥ इयंक्रान्तिःपूर्वेणसहतुल्या ॥
उदाहरणं ॥ सायनसूर्यः ८ । २२ । १६ ।
१४ । भगणा १२ च्युता ३ । ७ । ५३ । ४२ ।
अंशाः ९७ । ५३ । ४६ षड्भक्ताःफलं ३६
। क्रान्तिः ३ । ५८ । ३६ अनुपातफलेन
१ । १६ रहिताषड्गुणितासैवक्रान्तिः २३
। ४३० । अथसूक्ष्मक्रांतिसाधनं ॥ ॥ साय
नग्रहस्यभूजांशप्रमितकोष्टकस्याभागाद्या -
क्रांतिस्साध्या ॥ अग्रिमांतरेणकलाद्यंगुणयं
षष्ट्याभागेनकलात्मकेनफलेनसहितंकार्यं -
भागाद्याक्रांतिःस्यात् २३।४४।५८ अथश

रसाधनं ॥ सपातश्चन्द्रस्य ॥ अथवाविरा
ङ्चन्द्रस्यभूजांशप्रमितकोष्टकस्थःकलादिः
शरोग्राह्यःअग्रिमांतरेणशेषंगुणयंषष्ट्या -
भाजंत्रविकलात्मकेनफलेनसहितंकार्यंकला
दिबाणःस्यात् ॥ त्रिभिर्भाज्योंगुलादिःस्या
त् ॥ उदाहरणं ॥ विराङ्चन्द्रस्यभुजां
शाः ७ । ४३ । ४६ । शरः ३२ । ५३ । अन्तु
पातफलेन ३ । २४ सहितोजातःकलादिः
शरः ३६ । १६ त्रिभिर्भक्तोजातोंगुलाद्यःश
रः १२ । ५ अथोन्नतांशोपरिद्वादशांगुलशं
कोःछायासाधनं ॥ उन्नतांशप्रमितकोष्टका
दधस्थाग्याअग्रिमांतरेणशेषंगुणयंषष्ट्याभा-
ज्यंफलेनाग्रिमकोष्टकवशात्सहितंरहितं -
छाया: ॥ छायाभवति ॥ अथाश्विन्यादि
नांनक्षत्राणांउदयमध्यास्तलग्नज्ञानं ॥ अश्वि
न्युदयेमेषलग्नंराश्यादि । ० । १ । २६ । ५
रवेर्मध्यस्थितकर्कलग्नंराश्यादि ॥ ३ । १४

। ३६ । अस्तमयेतुलग्नंराश्यादि ६ । १२ । ५८ । एवंभरण्यादिषुज्ञेयं ॥ इतिविश्वनाथविरचितंमकरन्दस्योदाहरणं ॥ अथ संवत्सराद्यानयनमाह ॥ तत्रादौसंवत्सरानयनमाह ॥ शकाच्चेंदु १५१४ वियुक्शको नग ७ गुण:शून्यांबरांगोद्धृतो ६०० । भाद्यं लब्धमिताब्दवेददहनाढ्यं ३४ सावदभूपेंदुत: ॥ दिग्भागासकलायुतंप्रभवतोब्दा: षष्टिशेषा:स्मृता:शेषांशारविभिर्हतादिनमुखंमेषार्कत:प्राग्भवेत् ॥ १ ॥ उदाहरणं ॥ शक: १५। ५६ । अनेन १५१४ रहित:जातागताब्दा: ४२ सप्तभिर्गुणिता: २९४। शून्यांबरांगो ६०० हृता:फलंराश्यादि ० । ० । १४ । ४२ । ० राशिस्थानेगताब्द ६२ वेददहनाढ्यांयुत: ७६ । १४ । ४२ ० गताब्दयुतभूपेंदुत: १५ ८ । दिग्भागा १० सकला १५४८ युतं ७६ । १४ । ५७ । ४८ ऊर्ध्वां

कःपश्चात्तष्टःशेषांकः १६ गतवत्सरोज्ञेयःव
र्तमानःसुभानुसंवत्सरःशेषं १४ । ५७ ।
४८ द्वादशभिर्गुणितञ्जातंदिनादिकं १७८
। ३३ । ३६ दिन स्थानेत्रिंशद्भक्तेजातंमा
सादिकं ५ । २८ । ३३ । ३६ एभिर्मासादि
कैर्वर्तमानवर्षस्यमेषसंक्रांतिःसकाशात्पूर्व-
प्रवृत्तःसुभानुवत्सरःइदंद्वादशमध्येशोधिते-
शेषं ६ । ० । २६ । २४ एवंवर्तमानतुलांश
कः ० । २६ । २४ यावत्सुभानुवत्सरः ॥ त
दनंतरन्तारणाख्यः ॥ एववर्षमध्येद्वयोःफ
ललेख्यं ॥ दाक्षिणात्याःनर्मदायाःदक्षिणे
भागेमनुजमानेनसंवत्सरप्रवृत्तिमाहुः ॥ उ
क्तंच ॥ नर्मदोत्तरभागेस्यागेवृहस्मानेन
वत्सरःनर्मदायाश्वभागेतुमनुमानाद्धवैस्मृ-
तः ॥ तदानयनं ॥ शालिवाहनशाकोर्कं
संयुतःषष्टिहृत प्रभवपूर्ववत्सरास्तनुमाने -
न ॥ अथगुरूदयात्गुरुवर्षज्ञानमाह स्याद्

जीदिषु मासेषु वन्हिभादिद्वयंद्वयं ॥ उपांत्य
पञ्चमांतिषु नक्षत्राणांत्रयंत्रयं ॥ यस्मिन्नभ्यु
दितोजीवस्तन्नक्षत्राख्यवत्सरः ॥ तद्यथा ॥
यस्मिन्समयेगुरोरुदयःतस्मिन् समयेयस्मि
न्नक्षत्रेगुरुस्तिष्टति ॥ तन्नक्षत्रसंज्ञयोमासः
सगुरुवर्षसंज्ञकोज्ञेयः ॥ कृत्तिकारोहिणी
स्थितोगुरुःसूर्य सान्निध्यादुदयंप्राप्त स्तदा
कार्तिकसंज्ञकंगुरुवर्षंज्ञेयं ॥ मृगार्द्रयोर्मा
र्गशीर्षं ० ॥ पुनर्वसुपुष्ययोःपौषं ॥ श्लेषाम
घयोर्माघं ॥ पूर्वोत्तराभाहस्तेषु फाल्गुनः ॥
चित्रास्वात्योश्चैत्रं ॥ विशाखानुराधयोर्वैशा
खं ० ॥ ज्येष्टामूलयोर्ज्यैष्टसंज्ञं ० ॥ पूर्वो
त्तराषाढयोराषाढं ०हरिवासवयोःश्रावणं
० ॥ शततारकापूर्वाभाद्रपदोत्तराभाद्रपद
सुभाद्रं ० ॥ अंत्यद्वयभानामाश्विनसं ० ॥
तत्रपंचमःफाल्गुनःअंत्यआश्विनःउपांत्योभा
द्रपदस्तेषु प्रत्येकंनक्षत्रत्रययोगोज्ञातव्यः ॥

सूर्यसिद्धांतवचनाद्‌स्तमयनक्षत्राद्‌पिगुरु -
वर्षं ज्ञेयमिति ॥ अत्रास्तसमयोदयनक्षत्रमेकमे
वबाहुल्येनभवति । तथापिकदाचिद्विसंवा
देउदयास्तभादितिउभयनक्षत्रोपादानादुभ
ययुतानिमिश्रीभावेनवक्तव्यानि ॥ गुरूदय
दिनमारभ्योपक्रमइत्याह्वर्गणः ॥ प्रशंसातिस
ह्यर्ध्वेणसहितोयुगपद्गुरुः ॥ तस्मात्कालाद
हव्यसरात्पूर्वस्मादब्दःप्रवर्तते ॥ तच्चपूर्वइतिव
चनात् ॥ कार्तिकादयोगुरूदयादब्दाउदि
तदिवसात् ॥ प्रभवोदयस्तुमध्यमगुरुरा
शिभोगादितिविवेकः ॥ बहुसंमतत्वात् ॥
गुरूदयाद्, रोरब्दविचारणात् कर्त्तव्येत्य
र्थः ॥ गुर्वब्दफलंगुरूदयादग्रिमगुरूदयाप
र्यंतं ज्ञेयं ॥ यस्मिन्वर्षे गुरूदयेपुनर्वस्नक्षत्रे
गुरुस्तिष्ठतिइतिकारणात्इदंपौषसंज्ञकंगुरु
वर्षंतस्यफलंलेख्यं ॥ अथराजादिनिर्णयः॥
चैत्रादिमेषादिकुलीरतौलिमृगाख्यमार्द्रांघ

नुरादिवाराः ॥ राजाचमूसस्य रसाधिपा स्सस्युर्नीरसेशांबुधिधान्यनाथाः ॥ १ ॥ प्रति पदियदिचैत्रे शुक्लपक्षे भवेतांकथमपियदि वारौद्वौतदाभूपतिःकः ॥ प्रथमदिवसवारः कीर्तितोगर्गमुख्यैर्गुणवतिडिंभेराज्यभाग्ज्येष्टएव ॥ २ ॥ डिंभोबालः ॥ ॥पोतःपाकोर्भकोडिंभइत्यभिधानात् ॥ कांबोजादि देशेषु विशेषयुक्तः ॥ कांबोजखार्जूरकिरात सिंधुदेशेषु बिल्वेष्वपिदर्दुरेषु ॥ किंस्तुमध्याङ्गगतोव्दपःस्यात् दन्येषुसूर्योदयगोदिनेशः ॥ अन्यच्च ॥ प्रतिपद्दर्शसंधिस्सम ध्यान्हात्पूर्वतोयदि ॥ तदातद्दिनपोराजा परतश्चेत्परोभवेत् ॥ अत्रकेचिच्चांद्रवर्षस्यप्रतिपदादिदक्षिणेवर्षप्रवेशात् तत्रत्यएववारोवर्षेशइत्याहुःपठंतिच ॥ फाल्गुनांतिकुहराजेति ॥ तदेतद्गुर्जरदेशेप्राचुर्येणवर्तते ॥ दाक्षिणात्यास्त्वौदयिकप्रतिपद्वारमेव

राजानमाह: ॥ कश्यप: ॥ चैत्रशुक्लाद्यदिव
सेकिंस्तुभेववकीयवा ॥ अर्कोदयेतुयोवार:सो
ऽद्पःपरिकीर्तित: ॥ चैत्रशुक्लप्रतिपद्दि
वसेयोवार:सराजा ॥ मेषसंक्रांतिदिवसेयो
वार:समंत्री ॥ कर्कसंक्रांतिदिवसेयोवार:
सस्स्याधिप: ॥ तुलासंक्रांतिदिवसेयोवा
र:सरसाधिप: ॥ मृगसंक्रांतिदिवसेयोवा
रोनीरसाधिप:॥ आर्द्राप्रवेशदिवसेयोवार:
समेघाधिप: ॥ धनुसंक्रांतिदिवसेयोवार:स
पश्चिमधान्याधिप: ॥ एतेषांफलानिक्रमतो
लिख्यानि ॥ तदनंतरं । यस्यांतिथौयस्मि
न्वारेयस्मिन्नचत्रे यस्मिन्योगेआर्द्राप्रवेशस्त
त्फलानिलिख्यानि ॥ दिवारात्रौवाप्रवेशस्त
त्फलंलेख्यं ॥ अथनवमेघानयनं ॥ गता
व्दानवभिस्तष्टाशेषंहाराद्विशोधयेत् ॥ तत
आवर्त्तसंवर्तद्रोणपुष्करकीलक: ॥ नीलश्चव
रुणोवायुतमोसिवा:स्मृतानव ॥ अनगताव्दा

नयनं ॥ युग्मचंद्रशरचंद्रविहीनाशालिवा
हानशकात्गताःसमाः ॥ ॥ उदाहरणं ॥
शकः १५५६ अनेन १५ ५२ रहिताजातागता
ताब्दाः ४४ नवभिस्तष्टाःशेषं ८ हारात्शो
धितं १ आवर्तसंज्ञकोमेघस्तस्यफलंलिखंकि
चित्तुमेघचतुष्टयमाङ्गस्तदानयनंचत्रिभिर्गता
ब्दाःसहिताश्चतुर्भिःशेषंभवेदंबुपतिःक्रमेण
आवर्तसंवर्तकपुष्करस्वद्रोणश्चतुर्थोमुनिभिः
प्रदिष्टः ॥ अत्रापिपूर्ववद्गताब्दानयनं ॥ आ
वर्तेछिन्नदृष्टिःस्यात्संवर्तेजलपूरिता ॥ पु
ष्करेमन्दवृष्टिःस्यात्द्रोणोवर्षतिसर्वदा ॥
अथद्वादशनागानयनं ॥ गताब्दाद्वियुताः
सूर्यभक्तास्तत्रावशेषिताः ॥ सुबुद्धोनन्दसा
रीचकर्कोटकपृथुश्रवाः ॥ वासुकिस्तक्षकश्चै
वकंबलाश्वतरावुभौ ॥ हेममालीनरेंद्रश्चवज्र
दंष्ट्रोवृषस्तथा ॥ अत्रापिपूर्ववद्गताब्दाज्ञे
याः ॥ उदाहरणं ॥ गताब्दः ४४ द्वि

युता: ४६ द्वादशभिस्तष्टा:शेषं १० नरेंद्र संज्ञकोनागस्तत्फलं ॥ केचित्तुनागाष्टक माहुस्तदानयनं ॥ शाकोऽसाद्रिसंयुक्तो वसुभिर्भागशेषत: ॥ अनन्तादिक्रमेणैवत्र ष्टौनागा:प्रकीर्तिता: ॥ अनन्तोवासुकि:प द्मोमहापद्म:सुतक्षक: ॥ कुलीर:कर्कट:श ङ्खश्चाष्टौनागा:प्रकीर्तिता: ॥ अथसप्त वा तानयनं ॥ शाक:शरांकसंयुक्तोमुनिभि र्भागहारित: । आवहादिक्रमेणैवसप्त वाता:प्रकीर्तिता: ॥ आवह:प्रवहश्चैवसं वहोविवहस्तथा ॥ उद्वहोतिवहश्चैवसप्तवा ता:प्रकीर्तिता: ॥ अथवर्षादिनामानयनं ॥ महादेव: ॥ शाकस्त्रिगुणोनगभाजितश्चशेषं द्विनिघ्नंशरसंयुतंच ॥ लब्धंचशाकञ्चपुन:प्र कल्प्यपूर्वाङ्कवत्स्यु:खलुविश्वकाख्या: ॥ वर्षा चधान्यंतृणशीततेजोवायुश्चवृद्धि:क्षयविग्र - हौच ॥ एवंनवाभिहितानि ॥ उदाहरणं ॥

शाकः १५५६ त्रिगुणः ४६।६८ सप्तभ
क्तःलब्धं ६६६ शेषं ६ द्विगुणं १२ शर
५ संयुतः १७ एतेजाताविश्वकाख्यावर्षा
१७ लब्धं ६६६ त्रिभिर्गुणितं॥ १६६८ स
प्तभक्तं २८५ शेषं ३ द्विनिघ्नं ६ शर ५ युतं
जातंधान्यंएवंलब्धौपरिसर्वंचज्ञेयं ॥ तृणं
७ शीतं ६ तेजः ६ वायुः ११ वृद्धिः १७ क्षयः
६ विग्रहः ११ ॥ शाकञ्चवेदगुणितंसप्तभि
र्भागमाहरेत् ॥ शेषंद्विघ्नंत्रिभिर्युक्तंप्रोक्तं
विश्वाख्यसंज्ञकं ॥ क्षुधातृषातथानिद्राचाल
स्यंचोद्यमस्तथा ॥ शांतिःक्रोधोतदादंभो
लोभोमैथुनमेवच ॥ ततस्तुरसनिष्पत्तिःफ
लनिष्पत्तिरेवच ॥ उत्साहःसर्वलोकानांज्ञा
तव्यंनिश्चितंबुधैः ॥ त्रयोदशोदाहरणं ॥
शकः १५५६ चतुर्गुणितः ॥ ६२२४ सप्तभ
क्तः लब्धं ८८६ शेषं १ द्विघ्न २ त्रियु
तं ५ जाताक्षुधा ॥ पुनर्लब्धं ८८६ च

तुर्गुणं ३५५६ सप्त ७ भक्तं लब्धं ५०८ शेषं ० त्रियुतं तथा ३ एवं लब्धोपरि सर्वत्र ज्ञेयं निद्रा ७ आलस्य १३ उद्यम: ७ शांति: १३ क्रोध: ७ दम्भ: ५ लोभ: १३ मैथुनं १५ रसोत्पत्ति: १५ फलानि ५ उत्साह: ११ शकाद्वसुभिर्निघ्नं नवभिर्भागमाहरेत् ॥ शेषं तु द्विगुणीकृत्य रूपमत्रापि योजयेत् । उग्रं पापञ्च पुण्यं च व्याधिर्व्याधिकिनाशनं ॥ आचारश्चाप्यनाचारो मरणं जनिरेव च ॥ देश स्योपद्रवस्वास्थ्यं चौराकुलभयं तथा॥ अथैषां पञ्चदशानामुदाहरणं ॥ शक: १५५६ अष्ट ८ गुण: १२४४८ नवभिर्भक्त: लब्धं १३८३ शेषं १ द्विनिघ्नं २ रूपं १ योज्यं जातं उग्रं ३ एवं लब्धोपरि सर्वत्र ज्ञेयं ॥ उग्रपापद्वृत्या दिनाग्निनाशपर्यंतं पञ्चदश ज्ञेया: ॥ शक: पञ्चभि: सप्तभिर्गोभिर्दीर्घं श्चतुर्भिर्हत: सप्तभ- क्तावशिष्ट: ॥ ॥ द्विनिघ्नं त्रिभिर्युक्तमुष्णिज्ज्वरा

द्यंडजस्वेदजानांहिविंशोपकास्युः ॥ उदा
हरणं ॥ शकः १५५६ चतुर्थस्थापरः १५५६
क्रमेणगुणकैर्गुणितः ७७८०। १०८९२ ॥
१३००४ ॥ १७११६ सर्वत्रसप्तभक्तशेषाणि ३
।०।४।१ द्विगुणितानि ६।०।८।२ त्रिभि
र्युक्तानिजाताविंशोपकाः ॥ ९।३।११।५ उ
द्भिजाः ९ जरायुजाः ३ अंडजाः ११ स्वेदजाः
५ एतत्स्वरूपंअमरसिंहेनोक्तं ॥ उद्भिजास्त
रुगुल्माद्याःपक्षिसर्पाद्योंडजाः ॥ स्वेदजाःकृ
मिदंशाद्याःनृगवाद्याजरायुजाः ॥ अथरो
हिणीचक्रं ॥ मेषार्कदिनभाद्दृद्वयमब्धौद्व
यंतटे ॥ एकंगिरौद्वयंसंधौचतुर्दिक्षुतथा
न्यसेत् ॥ साभिजिच्चक्रमेणैवंफलंचचतुरो
हिणो ॥ अतिदृष्टिःसमुद्रेस्यात्तटेदृष्टिरव
र्षणं ॥ गिरौसंधौखंडदृष्टिरित्याहुःपूर्व
सूरयः ॥ अथाब्दपानयनं ॥ भूनंदातिथ्यू
नशकाद्धताभू १ तिथयः १५ कु१ रामा ३१

कुगुणा ३१ ऋसिद्धा: २४ भुवा १ ख
बाणै ५० स्त्रिशरैः ५३ श्चयुक्तास्तष्टानगैर
र्कसुखोव्द्पः स्यात् ॥ १ ॥ अथग्रहाणामा
यव्ययाः ॥ षट्सूर्येतिथयश्चन्द्रे भ्रष्टौभूमि
जस्तथा ॥ सप्तदशेंदुपुत्रे चदशभास्करनन्द
ने ॥ एकोनविंशतिर्जीवेराहौद्वादशकंभ
वेत् ॥ एकविंशतिराखग्रास्याच्छुक्रस्यापि
तथैवच ॥ अथायव्ययानयनं ॥ स्वस्वामि
वर्षाधिपवत्सरैकान्त्रिंशं शराढ्यं तिथिभक्त -
शेषं ॥ आयोथलब्धिस्त्रिगुणाशराढ्याति
थ्युद्धृताशेषमितोव्ययः स्यात् ॥ स्वस्वामि
शब्देनद्वादशराशिस्वामिनः वर्षाधिपशब्दे -
नराजा अनयोर्वर्ष मिति ॥ उदाहरणं ॥ मे
षस्वामीभौमः तस्यवर्षाणि ८ राजाबुधस्त
स्यवर्षाणि । १७ अनयोर्योगः २५ त्रि
भिर्गुणितः ७५ पञ्चभिर्युक्तः ८० तिथि
१५ भक्तःशेषं ५ एतन्मितोमेषराशौभव

तःलब्धं ५ त्रिगुणं १५ पञ्चयुक्तं २० तिथि भक्तंशेषं ५ मेषराशौव्ययः ॥ ५ ॥ एवंवृ षादीनामायव्ययाः ॥ प्रतिवर्षंयोराजाभ वति तस्यैवायव्ययौलेख्यौसिद्धिवत् ॥ ॥ इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञवि - रचितामकरन्दोदाहृतिःसमाप्तिमगमत् ॥ ॥ छ ॥ संवत् १९४० शके १७०५ वारा णसीप्रसादस्यनियोगेनतुयत्नतः ॥ काशीसं स्थानमुद्रायामङ्कितोयंविचक्षणैः ॥

